# ShrI Batukabhairava Ashtottarashatanama Stotram 2

# श्रीबटुकभैरवाष्टोत्तरशतनामस्तोत्रम् २

## Sanskrit Document Information



Text title : Batukabhairava Ashtottarashatanama Stotram 2

File name : baTukabhairavAShTottarashatanAmastotram2.itx

Category : aShTottarashatanAma, shiva

Location : doc_shiva

Transliterated by : Gopal Upadhyay gopal.j.upadhyay at gmail.com

Proofread by : Gopal Upadhyay, Psa Easwaran psaeaswaran at gmail.com

Source : kAlasaNkarShaNatantra

Latest update : October 15, 2016

Send corrections to : Sanskrit@cheerful.com



April 14, 2018

*sanskritdocuments.org*

# श्रीबटुकभैरवाष्टोत्तरशतनामस्तोत्रम् २



॥ श्रीगणेशाय नमः ॥

॥ श्रीउमामहेश्वराभ्यां नमः ॥

॥ श्रीगुरवे नमः ॥

॥ श्रीभैरवाय नमः ॥

ॐ अस्य श्रीबटुकभैरवस्तोत्रमन्त्रस्य कालग्निरुद्र ऋषिः ।
अनुष्टुप् छन्दः । आपदुद्धारकबटुकभैरवो देवता । ह्रीं बीजम् ।
भैरवीवल्लभः शक्तिः । नीलवर्णो दण्डपाणिरिति कीलकम् ।
समस्तशत्रुदमने समस्तापन्निवारणे सर्वाभीष्टप्रदाने च विनियोगः ॥

॥ ऋष्यादि न्यासः ॥

ॐ कालाग्निरुद्र ऋषये नमः शिरसि । अनुष्टुप्छन्दसे नमः मुखे ।
आपदुद्धारकश्रीबटुकभैरव देवतायै नमः हृदये ।
ह्रीं बीजाय नमः गुह्ये । भैरवीवल्लभ शक्तये नमः पादयोः ।
नीलवर्णो दण्डपाणिरिति कीलकाय नमः नाभौ ।
समस्तशत्रुदमने समस्तापन्निवारणे सर्वाभीष्टप्रदाने
विनियोगाय नमः सर्वाङ्गे ।
॥ इति ऋष्यादि न्यासः ॥

॥ अथ मूलमन्त्रः ॥

॥ ॐ ह्रीं वां बटुकाय क्ष्रौं क्ष्रौ आपदुद्धारणाय
कुरु कुरु बटुकाय ह्रां बटुकाय स्वाहा ॥

॥ इति मूलमन्त्रः ॥

॥ अथ ध्यानम् ॥

नीलजीमूतसङ्काशो जटिलो रक्तलोचनः ।

दंष्ट्राकरालवदनः सर्पयज्ञोपवीतवान् ॥

दंष्ट्रायुधालंकृतश्च कपालस्रग्विभूषितः ।
हस्तन्यस्तकरोटीको भस्मभूषितविग्रहः ॥
नागराजकटीसूत्रो बालमूर्ति दिगम्बरः ।
मञ्जु सिञ्जानमञ्जरी पादकम्पितभूतलः ॥
भूतप्रेतपिशाचैश्च सर्वतः परिवारितः ।
योगिनीचक्रमध्यस्थो मातृमण्डलवेष्टितः ॥
अट्टहासस्फुरद्वक्रो भ्रुकुटीभीषणाननः ।
भक्तसंरक्षणार्थाय दिक्षुभ्रमणतत्परः ॥

॥ इति ध्यानम् ॥

अथ स्तोत्रम् ।
ॐ ह्रीं बटुको वरदः शूरो भैरवः कालभैरवः ।
भैरवीवल्लभो भव्यो दण्डपाणिर्दयानिधिः ॥ १॥

वेतालवाहनो रौद्रो रुद्रभ्रुकुटिसम्भवः ।
कपाललोचनः कान्तः कामिनीवशकृद्वशी ॥ २॥
आपदुद्धारणो धीरो हरिणाङ्कशिरोमणिः ।
दंष्ट्राकरालो दष्टोष्ठौ धृष्टो दुष्टनिबर्हणः ॥ ३॥

सर्पहारः सर्पशिराः सर्पकुण्डलमण्डितः ।
कपाली करुणापूर्णः कपालैकशिरोमणिः ॥ ४॥

श्मशानवासी मांसाशी मधुमत्तोऽट्टहासवान् ।
वाग्मी वामव्रतो वामो वामदेवप्रियङ्करः ॥ ५॥
वनेचरो रात्रिचरो वसुदो वायुवेगवान् ।
योगी योगव्रतधरो योगिनीवल्लभो युवा ॥ ६॥

वीरभद्रो विश्वनाथो विजेता वीरवन्दितः ।
भृतध्यक्षो भूतिधरो भूतभीतिनिवारणः ॥ ७॥

कलङ्कहीनः कङ्काली क्रूरकुक्कुरवाहनः ।
गाढो गहनगम्भीरो गणनाथसहोदरः ॥ ८॥

देवीपुत्रो दिव्यमूर्तिर्दीप्तिमान् दीप्तिलोचनः ।
महासेनप्रियकरो मान्यो माधवमातुलः ॥ ९॥

भद्रकालीपतिर्भद्रो भद्रदो भद्रवाहनः ।
पशूपहाररसिकः पाशी पशुपतिः पतिः ॥ १०॥
चण्डः प्रचण्डचण्डेशश्चण्डीहृदयनन्दनः ।
दक्षो दक्षाध्वरहरो दिग्वासा दीर्घलोचनः ॥ ११॥

निरातङ्को निर्विकल्पः कल्पः कल्पान्तभैरवः ।
मदताण्डवकृन्मत्तो महादेवप्रियो महान् ॥ १२॥

खट्वाङ्गपाणिः खातीतः खरशूलः खरान्तकृत् ।
ब्रह्माण्डभेदनो ब्रह्मज्ञानी ब्राह्मणपालकः ॥ १३॥

दिग्चरो भूचरो भूष्णुः खेचरः खेलनप्रियः । दिग्चरो
सर्वदुष्टप्रहर्ता च सर्वरोगनिषूदनः ।
सर्वकामप्रदः शर्वः सर्वपापनिकृन्तनः ॥ १४॥

इत्थमष्टोत्तरशतं नाम्नां सर्वसमृद्धिदम् ।
आपदुद्धारजनकं बटुकस्य प्रकीर्तितम् ॥ १५॥
एतच्च श्रृणुयान्नित्यं लिखेद्वा स्थापयेद्गृहे ।
धारयेद्वा गले बाहौ तस्य सर्वा समृद्धयः ॥ १६॥

न तस्य दुरितं किञ्चिन्न चोरनृपजं भयम् ।
न चापस्मृतिरोगेभ्यो डाकिनीभ्यो भयं न हि ॥ १७॥

न कूष्माण्डग्रहादिभ्यो नापमृत्योर्न च ज्वरात् ।
मासमेकं त्रिसन्ध्यं तु शुचिर्भूत्वा पठेन्नरः ॥ १८॥

सर्वदारिद्र्यनिर्मुक्तो निधिं पश्यति भूतले ।
मासद्वयमधीयानः पादुकासिद्धिमान् भवेत् ॥ १९॥

अञ्जनं गुटिका खड्गं धातुवादरसायनम् ।
सारस्वतं च वेतालवाहनं बिलसाधनम् ॥ २०॥
कार्यसिद्धिं महासिद्धिं मन्त्रं चैव समीहितम् ।
वर्षमात्रमधीयानः प्राप्नुयात्साधकोत्तमः ॥ २१॥

एतत्ते कथितं देवि गुह्याद्गुह्यतरं परम् ।
कलिकल्मषनाशनं वशीकरणं चाम्बिके ॥ २२॥

॥ इति कालसङ्कर्षणतन्त्रोक्त
श्रीबटुकभैरवाष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ॥

